९२७ ॐ मदाय नमः।
९२८ ॐ सर्ववश्यकराय नमः।
९२९ ॐ शक्तये नमः।
९३० ॐ अनन्ताय नमः।
९३१ ॐ अनन्तङ्गलाय नमः।
९३२ ॐ अष्टमूर्तये नमः।
९३३ ॐ नयोपेताय नमः।
९३४ ॐ विरूपाय नमः।
९३५ ॐ सुरसुन्दाराय नमः।
९३६ ॐ धूमकेतवे नमः।
९३७ ॐ महाकेतवे नमः।
९३८ ॐ सत्यकेतवे नमः।
९३९ ॐ महारथाय नमः।
९४० ॐ नन्दिप्रियाय नमः।
९४१ ॐ स्वतन्त्राय नमः।
९४२ ॐ मेखलिने नमः।
९४३ ॐ डमरुप्रियाय नमः।
९४४ ॐ लौहाङ्गाय नमः।
९४५ ॐ सर्वविदे नमः।
९४६ ॐ धन्विने नमः।
९४७ ॐ खण्डलाय नमः।
९४८ ॐ शर्वाय नमः।
९४९ ॐ ईश्वराय नमः।
९५० ॐ फलभुजे नमः।
९५१ ॐ फलहस्ताय नमः।
९५२ ॐ सर्वकर्मफलप्रदाय नमः।
९५३ ॐ धर्माध्यक्षाय नमः।
९५४ ॐ धर्मपालाय नमः।
९५५ ॐ धर्माय नमः।
९५६ ॐ धर्मप्रदाय नमः।
९५७ ॐ अर्थदाय नमः।
९५८ ॐ पञ्चविंशतितत्त्वज्ञाय नमः।
९५९ ॐ तारकाय नमः।
९६० ॐ ब्रह्मतत्पराय नमः।
९६१ ॐ त्रिमार्गवसतये नमः।
९६२ ॐ भीमाय नमः।
९६३ ॐ सर्वदुःखनिबर्हणाय नमः।
९६४ ॐ ऊर्जस्वते नमः।
९६५ ॐ निष्कलाय नमः।
९६६ ॐ शूलिने नमः।
९६७ ॐ मौलिने नमः।
९६८ ॐ गर्जन्निशाचराय नमः।
९६९ ॐ रक्ताम्बरधराय नमः।
९७० ॐ रक्ताय नमः।
९७१ ॐ रक्तमाल्याय नमः।
९७२ ॐ विभूषणाय नमः।
९७३ ॐ वनमालिने नमः।
९७४ ॐ शुभाङ्गाय नमः।
९७५ ॐ श्वेताय नमः।
९७६ ॐ श्वेताम्बराय नमः।
९७७ ॐ यूने नमः।
९७८ ॐ जयाय नमः।
९७९ ॐ अजयपरीवाराय नमः।
९८० ॐ सहस्त्रवदनाय नमः।
९८१ ॐ कपये नमः।
९८२ ॐ शाकिनीडाकिनीयक्षरक्षोभूत-प्रभञ्जकाय नमः।
९८३ ॐ सद्योजाताय नमः।
९८४ ॐ कामगतये नमः।
९८५ ॐ ज्ञानमूर्तये नमः।
९८६ ॐ यशस्कराय नमः।
९८७ ॐ शम्भुतेजसे नमः।
९८८ ॐ सार्वभौमाय नमः।
९८९ ॐ विष्णुभक्ताय नमः।
९९० ॐ प्लवङ्गमाय नमः।
९९१ ॐ चतुर्नवतिमन्त्रज्ञाय नमः।
९९२ ॐ पौलस्त्यबलदर्पघ्ने नमः।
९९३ ॐ सर्वलक्ष्मीप्रदाय नमः।
९९४ ॐ श्रीमते नमः।
९९५ ॐ अङ्गदप्रियाय नमः।
९९६ ॐ ईडिताय नमः।
९९७ ॐ स्मृतिबीजाय नमः।
९९८ ॐ सुरेशानाय नमः।
९९९ ॐ संसारभयनाशनाय नमः।
१००० ॐ उत्तमाय नमः।
१००१ ॐ श्रीपरीवाराय नमः।
१००२ ॐ श्रिताय नमः।
१००३ ॐ रुद्राय नमः।
१००४ ॐ कामदुहे नमः।

***

# ॥ लान्गूलोपनिषत् ॥

श्रीगणेशाय नमः। ॐ अस्य श्री अनन्तघोरप्रलयज्वालाग्नि-रौद्रस्य वीरहनुमत्साध्यसाधनाघोरमूलमन्त्रस्य ईश्वर ऋषिः। अनुष्टुप् छन्दः। श्रीरामलक्ष्मणौ देवता। सौं बीजम्। अञ्जनासूनुरिति शक्तिः। वायुपुत्र इति कीलकम्। श्रीहनुमत्प्रसादसिद्ध्यर्थं भूर्भुवस्स्वर्लोकसमासीन- तत्वम्पद-शोधनार्थं जपे विनियोगः। ॐ भूः नमो भगवते दावानलकालाग्निहनुमते अङ्गुष्ठाभ्यां नमः। ॐ भुवः नमो भगवते चण्डप्रतापहनुमते तर्जनीभ्यां नमः। ॐ स्वः नमो भगवते चिन्तामणिहनुमते मध्यमाभ्यां नमः। ॐ महः नमो भगवते पातालगरुडहनुमते अनामिकाभ्यां नमः। ॐ जनः नमो भगवते कालाग्निरुद्रहनुमते कनिष्ठिकाभ्यां नमः। ॐ तपः सत्यं नमो भगवते भद्रजातिविकटरुद्रवीरहनुमते करतलकर-पृष्ठाभ्यां नमः। ॐ भूः नमो भगवते दावानलकालाग्निहनुमते हृदयाय नमः। ॐ भुवः नमो भगवते चण्डप्रतापहनुमते शिरसे स्वाहा। ॐ स्वः नमो भगवते चिन्तामणिहनुमते शिखायै वषट्। ॐ महः नमो भगवते पातालगरुडहनुमते कवचाय हुम्। ॐ जनः नमो भगवते कालाग्निरुद्रहनुमते नेत्रत्रयाय वौषट्। ॐ तपः सत्यं नमो भगवते भद्रजातिविकटरुद्रवीरहनुमते अस्त्राय फट्। अथ ध्यानम्। वज्राङ्गं पिङ्गनेत्रं कनकमयलसत्कुण्डलाक्रान्तगण्डं दम्भोलिस्तम्भसारप्रहरण-विवशीभूतरक्षोऽधिनाथम्। उद्यल्लाङ्गूलघर्षप्रचलजलनिधिं भीमरूपं कपीन्द्रं ध्यायन्तं रामचन्द्रं प्लवगपरिवृढं सत्वसारं प्रसन्नम्॥ इति मानसोपचारैः सम्पूज्य। ॐ नमो भगवते दावानलकालाग्निहनुमते जयश्रियो जयजीविताय धवलीकृतजगत्त्रय वज्रदेह वज्रपुच्छ वज्रकाय वज्रतुण्ड वज्रमुख वज्रनख वज्रबाहो वज्ररोम वज्रनेत्र वज्रदन्त वज्रशरीर सकलात्मकाय भीमकर पिङ्गलाक्ष उग्र प्रलयकालरौद्र वीरभद्रावतार शरभसालुवभैरवदोर्दण्ड लङ्कापुरीदाहन उदधिलङ्घन दशग्रीवकृतान्त सीताविश्वास ईश्वरपुत्र अञ्जना-गर्भसम्भूत उदयभास्करबिम्बानलग्रासक देवदानवऋषिमु-निवन्द्य पाशुपतास्त्रब्रह्मास्त्रबैलवा स्त्रनारायणास्त्रकाल शक्ति-कास्त्रदण्डकास्त्रपाशाघोरास्त्रनिवारण पाशुपतास्त्रब्रह्मास्त्रबैलवा-स्त्रनारायणास्त्रमृड सर्वशक्तिग्रसन ममात्मरक्षाकर परविद्या-निवारण आत्मविद्यासंरक्षक अग्निदीप्त अथर्वणवेद-सिद्धस्थिरकालाग्निनिराहारक वायुवेग मनोवेग श्रीरामतार-कपरब्रह्मविश्वरूपदर्शन लक्ष्मणप्राणप्रतिष्ठानन्दकर स्थल-जलाग्निमर्मभेदिन् सर्वशत्रून् छिन्धि छिन्धि मम वैरिणः खादय खादय मम सञ्जीवनपर्वतोत्पाटन डाकिनीविध्वंसन सुग्रीवसख्यकरण निष्कलङ्क कुमारब्रह्मचारिन् दिगम्बर सर्वपाप सर्वग्रह कुमारग्रह सर्वं छेदय छेदय भेदय भेदय भिन्धि भिन्धि खादय खादय टङ्क टङ्क ताडय ताडय मारय मारय शोषय शोषय ज्वालय ज्वालय हारय हारय नाशय नाशय अतिशोषय अतिशोषय मम सर्वं च हनुमन् रक्ष रक्ष ॐ ह्रां ह्रीं ह्रूं हुं फट् घे घे स्वाहा॥ ॐ नमो भगवते चण्डप्रतापहनुमते महावीराय सर्वदुःखविनाशनाय ग्रहमण्डलभूतमण्डल-प्रेतपिशाचमण्डल सर्वोच्चाटनाय अतिभयङ्करज्वर-माहेश्वरज्वर-विष्णुज्वर-ब्रह्मज्वर- वेताळ ब्रह्मराक्षसज्वर-पित्तज्वर-श्लेष्मसान्निपातिकज्वर-विषमज्वर- शीतज्वर एकाहिकज्वर-द्व्याहिकज्वर-त्रैहिकज्वर-चातुर्थिकज्वर-अर्धमासिकज्वर-मासिकज्वर-षाण्मासिकज्वर सांवत्सरि-कज्वर- अस्थ्यन्तर्गतज्वर-महापस्मार-श्रमिकापस्मारांश्च भेदय भेदय खादय खादय ॐ ह्रां ह्रीं ह्रूं हुं फट् घे घे स्वाहा॥ ॐ नमो भगवते चिन्तामणिहनुमते अङ्गशूल-अक्षिशूल-शिरश्शूल- गुल्मशूल-उदरशूल-कर्णशूल-नेत्रशूल-गुदशूल-कटिशूल- जानुशूल-जङ्घाशूल-हस्तशूल-पादशूल-गुल्फशूल-वातशूल- पित्तशूल-पायुशूल-स्तनशूल-परिणामशूल-परिधामशूल- परिबाणशूल-दन्तशूल-कुक्षिशूल-सुमनश्शूल-सर्वशूलानि निर्मूलय निर्मूलय दैत्यदानवकामिनी-वेतालब्रह्मराक्षसकोलाहल- नागपाशानन्तवासुकितक्ष-ककार्कोटकलिङ्गपद्मककुमुदज्वलरोगपाश- महामारीन् कालपाशविषं निर्विषं कुरु कुरु ॐ ह्रां ह्रीं ह्रूं हुं फट् घे घे स्वाहा॥ ॐ ह्रीं श्रीं क्लीं ग्लां ग्लीं ग्लूं ॐ नमो भगवते पातालगरुडहनुमते भैरववनगतगजसिंहेन्द्राक्षीपाशबन्धं छेदय छेदय प्रलयमारुत कालाग्निहनुमन् श्रृङ्खलाबन्धं विमोक्षय विमोक्षय सर्वग्रहं छेदय छेदय मम सर्वकार्याणि साधय साधय मम प्रसादं कुरु कुरु मम प्रसन्न श्रीरामसेवकसिंह भैरवस्वरूप

# ॥ श्रीहनुमत्प्रशंसनम् ॥

मुक्तिप्रदानात् प्रतिकर्तृता मे सर्वस्य बोधो भवतां भवेत ।
हनूमतो न प्रतिकर्तृता स्यात् स्वभावभक्तस्य निरौषधं मे ॥१॥

मद्भक्तौ ज्ञानपूर्तावनुपधिकबलप्रोन्नतिस्थैर्यधैर्य-
स्वाभाव्याधिक्यतेजःसुमतिदमशमेष्वस्य तुल्यो न कश्चित् ।
शेषो रुद्रः सुपर्णोऽप्युरुगुणसमितौ नो सहस्रांशुतुल्या
अस्येत्यस्मान्मदैशं पदमहममुना सार्धमेवोपभोक्ष्ये ॥२॥

पूर्वं जिगाय भुवनं दशकन्धरोऽसा-
वब्जोद्भवस्य वरतो न तु तं कदाचित् ।
कश्चिज्जिगाय पुरुहूतसुतः कपित्वाद्-
विष्णोर्वरादजयदर्जुन एव चैनम् ॥३॥

दत्तो वरो न मनुजान् प्रति वानरांश्च
धात्रास्य तेन विजितो युधि वालिनैषः।
अब्जोद्भवस्य वरमाश्वभिभूय रक्षो
जिग्ये त्वहं रणमुखे बलिमाह्वयन्तम् ॥४॥

बलेर्द्वास्थोऽहं वरमस्मै सम्प्रदाय पूर्वं तु ।
तेन मया रक्षोऽस्तं योजनमयुतं पदाङ्गुल्या ॥५॥

पुनश्च युद्धाय समाह्वयन्तं न्यपातयं रावणमेकमुष्टिना ।
महाबलोऽहं कपिलाख्यरूपस्त्रिकूटरूपः पवनश्च मे सुतः ॥६॥
आवां स्वशक्त्या जयिनाविति स्म शिवो वरान्तेऽजयदेनमेवम्।
ज्ञात्वा सुराजेयमिमं हि वव्रे हरो जयेयाहममुं दशाननम् ॥७॥

अतः स्वभावाज्जयिनावहं च वायुश्च वायुर्हनुमान् सएषः ।
अमुष्य हेतोस्तु पुरा हि वायुना -
शिवेन्द्रपूर्वा अपि काष्ठवत्कृताः ॥८॥

अतो हनूमान् पदमेतु धातुर्मदाज्ञया सृष्ट्यवनादिकर्म ।
मोक्षं च लोकस्य सदैव कुर्वन्
-मुक्तश्च मुक्तान् सुखयन् प्रवर्तताम् ॥९॥

भोगाश्च ये यानि च कर्मजातान्यनाद्यनन्तानि ममेह सन्ति ।
मदाज्ञया तान्यखिलानि सन्ति
-धातुः पदे तत् सहभोगनाम ॥१०॥

एतादृशं मे सहभोजनं ते मया प्रदत्तं हनुमन् सदैव ।
इतीरितस्तं हनूमान् प्रणम्य -
जगाद वाक्यं स्थिरभक्तिनम्रः ॥११॥

॥ इति श्रीमदानन्दतीर्थीयमहाभारततात्पर्यनिर्णयतः
श्रीहनुमत्प्रशंसनम्॥

# ॥ हनुमद्वाडवानलस्तोत्रम् ॥

श्रीगणेशाय नमः ।
ॐ अस्य श्रीहनुमद्वाडवानलस्तोत्रमन्त्रस्य श्रीरामचन्द्र ऋषिः।, श्रीवडवानलहनुमान् देवता।, मम समस्तरोगप्रशमनार्थं।, आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं।, समस्तपापक्षयार्थं।, सीतारामचन्द्रप्रीत्यर्थं च हनुमद्वाडवानलस्तोत्रजपमहं करिष्ये॥
ॐ ह्रां ह्रीं ॐ नमो भगवते श्री महाहनुमते प्रकटपराक्रम सकलदिङ्मण्डलयशोवितानधवलीकृतजगत्त्रितय वज्रदेह रुद्रावतार लङ्कापुरीदहन उमाअमलमन्त्र उदधिबन्धन दशशिरःकृतान्तक सीताश्वसन वायुपुत्र अञ्जनीगर्भसम्भूत श्रीरामलक्ष्मणानन्दकर कपिसैन्यप्राकार सुग्रीवसाह्य रणपर्वतोत्पाटन कुमारब्रह्मचारिन् गभीरनाद सर्वपापग्रहवारण सर्वज्वरोच्चाटन डाकिनीविध्वंसन ॐ ह्रां ह्रीं ॐ नमो भगवते महावीरवीराय सर्वदुःखनिवारणाय ग्रहमण्डलसर्वभूतमण्डलसर्वपिशाचमण्डलोच्चाटन भूतज्वर एकाहिकज्वर द्व्याहिकज्वर त्र्याहिकज्वरचातुर्थिकज्वर सन्तापज्वर विषमज्वर तापज्वरमाहे श्वरवैष्णवज्वरान् छिन्धि छिन्धि यक्षब्रह्मरा क्षसभूतप्रेतपिशाचान् उच्चाटय उच्चाटय ॐ ह्रां ह्रीं ॐ नमो भगवते श्रीमहाहनुमते ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः आं हां हां हां औं सौं एहि एहि एहि ॐहं ॐहं ॐहं ॐहं ॐनमो भगवते श्रीमहाहनुमते श्रवणचक्षुर्भूतानां शाकिनीडाकिनीनां विषमदुष्टानां सर्वविषं हर हर आकाशभुवनं भेदय भेदय छेदय छेदय मारय मारय शोषय शोषय मोहय मोहय ज्वालय ज्वालय प्रहारय प्रहारय सकलमायां भेदय भेदय ॐ ह्रां ह्रीं ॐ नमो भगवते महाहनुमते सर्व ग्रहोच्चाटन परबलं क्षोभय क्षोभय सकलबन्धनमोक्षणं कुरु कुरु शिरःशूलगुल्मशूलसर्वशूलान्निर्मूलय निर्मूलय नागपाशानन्तवासुकित क्षककर्कोटक कालियान् यक्षकुलजल गतबिलगतरात्रिञ्चर दिवाचर सर्वान्निर्विषं कुरु कुरु स्वाहा॥
राजभय चोरभय परमन्त्रपरयन्त्रपरतन्त्रपरविद्याच्छेदय छेदय स्वमन्त्रस्वयन्त्रस्वतन्त्रस्वविद्याः प्रकटय प्रकटय सर्वारिष्टा- न्नाशय नाशय सर्वशत्रून्नाशय नाशय असाध्यं साधय साधय हुं फट् स्वाहा॥
॥ इति श्रीविभीषणकृतं हनुमद्वाडवानलस्तोत्रं सम्पूर्णम् ॥

# ॥ श्री हनुमान सहस्त्रनामस्तोत्रम् ॥

श्री हनुमंत सहस्त्रनामस्तोत्रम् ध्यानम् अतुलितबलधामं हेम-शैलाभदेहं दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् । सकलगुण-निधानं वानराणामधीशं रघुपतिप्रियभक्तं वातजातं नमामि ॥

स्तोत्रम्

श्रीरामचन्द्र उवाच हनुमान्श्रीप्रदो वायुपुत्रो रुद्रोऽनघोऽजरः ।
अमृत्युर्वीरवीरश्च ग्रामवासो जनाश्रयः ॥१॥
धनदो निर्गुणोऽकायो वीरो निधिपतिर्मुनिः ।
पिङ्गक्षो वरदो वाग्मी सीताशोकविनाशनः ॥२॥
शिवः सर्वः परोऽव्यक्तो व्यक्ताव्यक्तो रसाधनः ।
पिङ्गकेशः पिङ्गरोमा श्रुतिगम्य सनातनः ॥३॥
अनादिर्भवान देवो विश्वहेतुर्निरामयः ।
आरोग्यकर्ता विश्वेशो विश्वनाथो हरीश्वरः ॥४॥
भर्गो रामो रामभक्तः कल्याणप्रकृतिः स्थिरः ।
विश्वम्भरो विश्वमूर्तिर्विश्वाकारोऽथ विश्वपः ॥५॥
विश्वात्मा विश्वसेव्योऽथ विश्वो विश्वहरो रविः ।
वि्श्वचेष्टो विश्वगम्यो विश्वध्येयः कलाधरः ॥६॥
प्लवङ्गमः कपिश्रेष्ठो ज्येष्ठो वैद्यो वनेचरः ।
बालो वृद्धो युवा तत्त्वं तत्त्वगम्यः सखा ह्वाजः ॥७॥
अञ्जनासूनुरव्यग्रो ग्रामख्यातो धराधरः ।
भूर्भुवःस्वर्महर्लोको जनलोकस्तपोऽव्ययः ॥८॥
सत्यमोङ्कारगम्यश्च प्रववो व्यापकोऽमलः ।
शिवधर्मप्रतिष्ठाता रामेष्टः फाल्गुनप्रियः ॥९॥
गोष्पदीकृतवारीशः पूर्णकामो धरापतिः ।
रक्षोघ्नोः पुण्डरीकाक्षः शरणागतवत्सलः ॥१०॥
जानकीप्राणदाता च रक्षःप्राणापहारकः ।
पूर्णः सत्यः पीतवासा दिवाकरसमप्रभः ॥११॥
देवोद्यानविहारी च देवताभयभञ्जनः ।
भक्तोदयो भक्तलब्धो भक्तपालनतत्परः ॥१२॥
द्रोणहर्ता शक्तिनेता शक्तिराक्षसमारकः ।
अक्षघ्नो रामदूतश्च शाकिनीजीवहारकः ॥१३॥
बुबुकारहतारातिर्गर्वपर्वतमर्दनः ।
हेतुस्त्वहेतुः प्रांशुश्च विश्वभर्ता जगद्गुरुः ॥१४॥
जगन्नेता जगन्नाथो जगदीशो जनेश्वरः ।
जगद्धितो हरिः श्रोशो गरुडस्मयभञ्जनः ॥१५॥
पार्थध्वजो वायुपुत्रोऽमितपुच्छोऽमितविक्रमः ।
ब्रह्मपुच्छः परब्रह्मपुच्छो रामेष्टकारकः ॥१६॥
सुग्रीवादियुतो ज्ञानी वानरो वानरेश्वरः ।
कल्पस्थायी चिरञ्जीवी तपनश्च सदाशिवः ॥१७॥
सन्नातिः सद्गतिर्भुक्तिमुक्तिदः कीर्तिदायकः ।
कीर्तिः कीर्तिप्रदश्चैव समुद्रः श्रीपदः शिवः ॥१८॥
भक्तोदयो भक्तगम्यो भक्तभाग्यप्रदायकः ।
उदधिक्रमणो देवः संसारभयनाशनः ॥१९॥
वार्धिबन्धनकृद विश्वजेता विश्वप्रतिष्ठितः ।
लङ्कारिः कालपुरुषो लङ्केशगृहभञ्जकः ॥२०॥
भूतावासो वासुदेवो वसुस्त्रिभुवनेश्वरः ।
श्रीरामरूपः कृष्णस्तु लङ्काप्रासादभञ्जकः ॥२१॥
कृष्णः कृष्णस्तुतः शान्तः शान्तिदो विश्वपावनः ।
विश्वभोक्ताथ मारघ्नो ब्रह्मचारी जितेन्द्रियः ॥२२॥
ऊर्ध्वगो लाङ्गुली माली लाङ्गूलाहतराक्षसः ।
समीरतनुजो वीरो वीरतारी जयप्रदः ॥२३॥
जगन्मङ्गलदः पुण्यः पुण्यश्रवणकीर्तनः ।
पुण्यकीर्तिः पुण्यगतिर्जगत्पावनपावनः ॥२४॥
देवेशो जितमारोऽथ रामभक्तिविधायकः ।
ध्याता ध्येयो लयः साक्षी चेता चैतन्यविग्रहः ॥२५॥
ज्ञानदः प्राणदः प्राणो जगत्प्राण समीरणः ।
विभीषणप्रियः शूरः पिप्पलाश्रयसिद्धिदः ॥२६॥
सिद्धः सिद्धश्रयः कालो महोक्षः कालजान्तकः ।
लङ्केशनिधनस्थायी लङ्कादाहक ईश्ववरः ॥२७॥
चन्द्रसूर्यग्निनेत्रश्च कालाग्निः प्रलयान्तकः ।
कपिलः कपिशः पुण्यराशिर्द्वादशराशिगः ॥२८॥
सर्वाश्रयोऽप्रमेयात्मा रेवत्यादिनिवारकः ।
लक्ष्मणप्राणदाता च सीताजीवनहेतुकः ॥२९॥
रामध्येयो हृषीकेशी विष्णुभक्त जटी बली ।
देवारिदर्पहा होता धाता कर्ता जगत्प्रभुः ॥३०॥
नगरग्रामपालश्च शुद्धो बुद्धो निरत्रपः ।
निरञ्जनो निर्विकल्पो गुणातीतो भयंकरः ॥३१॥

हनुमांश्च दुराराध्यस्तपःसाध्यो महेश्वरः ।
जानकीधनशोकोत्थतापहर्ता परात्परः ॥३२॥
वाङ्मयः सदसद्रूपः कारणं प्रकृतेः परः ।
भाग्यदो निर्मलो नेता पुच्छलङ्काविदाहकः ॥३३॥
पुच्छबद्धयातुधानो यातुधानरिपुप्रियः ।
छायापहारी भूतेशो लोकेशः सद्गतिप्रदः ॥३४॥
प्लवङ्गमेश्वरः क्रोधः क्रोधसंरक्तलोचनः ।
सौम्यो गुरुः काव्यकर्ता भक्तानां च वरप्रदः ॥३५॥
भक्तानुकम्पी विश्वेशः पुरुहूतः पुरंदरः ।
क्रोधहर्ता तमोहर्ता भक्ताभयवरप्रदः ॥३६॥
अग्निर्विभावसुर्भास्वान् यमो निऋतिरेव च ।
वरुणो वायुगतिमान् वायुः कौबेर ईश्वरः ॥३७॥
रविश्चन्द्रः कुजः सौम्यो गुरुः काव्यः शनैश्चरः ।
राहुः केतुर्मरुद्धोता दाता हर्ता समीरजः ॥३८॥
मशकीकृतदेवारिदैत्यारिर्मधुसूदनः ।
कामः कपिः कामपालः कपिलो विश्वजीवन ॥३९॥
भागीरथीपदाम्भोजः सेतुबन्धविशारदः ।
स्वाहा स्वधा हविः कव्यं हव्यवाहप्रकाशकः ॥४०॥
स्वप्रकाशो महावीरो लघुरूर्जितविक्रमः ।
उड्डीनोड्डीनगतिमान् सद्गतिः पुरुषोत्तमः ॥४१॥
जगदात्मा जगद्योनिर्जगदन्तो ह्यनन्तकः ।
विपाप्मा निष्कलङ्कोऽथ महान् महादहंकृतिः ॥४२॥
खं वायुः पृथिवी चापो वह्निर्दिक्पाल एव च ।
क्षेत्रज्ञः क्षेत्रहर्ता च पल्वलीकृतसागरः ॥४३॥
हिरण्मयः पुराणश्च खेचरो भूचरोऽमरः ।
हिरण्मयगर्भः सूत्रात्मा राजराजो विशांपतिः ॥४४॥
वेदान्तवेद्य उद्गीथो वेदवेदाङ्गपारगः ।
प्रतिग्रामस्थितिः सद्यःस्फूर्तिदाता गुणाकरः ॥४५॥
नक्षत्रमाली भूतात्मा सुरभिः कल्पपादपः ।
चिन्तामणिर्गुणनिधिः प्रजाधारो ह्यनुत्तमः ॥४६॥
पुण्यश्लोकः पुरारातिर्ज्योतिष्माञ्शर्वरीपतिः ।
किलकिलारावसंत्रस्तभूतप्रेतपिशाचकः ॥४७॥
ऋणत्रयहरः सूक्ष्मः स्थूलः सर्वगतिः पुमान् ।
अपस्मारहरः स्मर्ता श्रुतिर्गाथा स्मृतिर्मनुः ॥४८॥
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं यतीश्वरः ।
नादरूपः परं ब्रह्म ब्रह्म ब्रह्मपुरातनः ॥४९॥
एकोऽनेको जनः शुक्लः स्वयंज्योतिरनाकुलः ।
ज्योतिर्ज्योतिरनादिश्च सात्त्विको राजसस्तमः ॥५०॥
तमोहर्ता निरलम्बो निराकारी गुणाकरः ।
गुणाश्रयो गुणमयो बृहत्कर्मा बृहद्यशाः ॥५१॥
बृहद्धनुर्बृहत्पादो बृहन्मूर्धा बृहत्स्वनः ।
बृहत्कर्णो बृहन्नासो बृहद्बाहुर्बृहत्तनुः ॥५२॥
बृहज्जानुर्बृहत्कार्यो बृहत्पुच्छो बृहत्करः ।
बृहद्गतिर्बृहत्सेव्यो बृहल्लोकफलप्रदः ॥५३॥
बृहच्छक्तिर्बृहद्वाञ्छाफलदो बृहदीश्वरः ।
बृहल्लोकनुतो द्रष्टा विद्यादाता जगद्गुरुः ॥५४॥
देवाचार्यः सत्यवादी ब्रह्मवादी कलाधरः ।
सप्तपातालगामी च मलयाचलसंश्रयः ॥५५॥
उत्तराशास्थितः श्रीदो दिव्यौषधिवशः खगः ।
शाखामृगः कपीन्द्रोऽथ पुराणश्रुतिचञ्चुरः ॥५६॥
चतुरब्राह्मणो योगी योगगम्यः परावरः ।
अनादिनिधनो व्यासो वैकुण्ठः पृथिवीपतिः ॥५७॥
अपराजितो जितारातिः सदानन्दो दयायुतः।
गोपालो गोपतिर्गोप्ता कलिकालपराशनः ॥५८॥
मनोवेगी सदायोगी संसारभयनाशनः।
तत्त्वदाताथ तत्त्वज्ञस्तत्त्वं तत्त्वप्रकाशकः ॥५९॥
शुद्धो बुद्धो नित्यमुक्तो भक्तराजो जयद्रथः।
प्रलयोऽमितमायश्च मायातीतो विमत्सरः ॥६०॥
मायाभर्जितरक्षश्च मायानिर्मितविष्टपः।
मायाश्रयश्च निर्लेपो मायानिर्वर्तकः सुखम् ॥६१॥
सुखी सुखप्रदो नागो महेशकृतसंस्तवः।
महेश्वरः सत्यसंधः शरभः कलिपावनः ॥६२॥
सहस्रकन्धरबलविध्वंसनविचक्षणः।
सहस्रबाहुः सहजो द्विबाहुर्द्विभुजोऽमरः॥६३॥
चतुर्भुजो दशभुजो हयग्रीवः खगाननः।
कपिवक्त्रः कपिपतिर्नरसिंहो महाद्युतिः ॥६४॥
भीषणो भावगो वन्द्यो वराहो वायुरूपधृक् ।
लक्ष्मणप्राणदाता च पराजितदशाननः ॥६५॥

पारिजातनिवासी च वटर्वचनकोविदः ।
सुरसास्यविनिर्मुक्तः सिंहिकाप्राणहारकः ॥६६॥
लङ्कालङ्कारविध्वंसी वृषदंशकरूपधृक् ।
रात्रिसंचारकुशलो रात्रिंचरगृहग्निदः ॥६७॥
किङ्करान्तकरो जम्बुमालिहन्तोगुरूपधृक् ।
आकाशचारी हरिगो मेघनादरणोत्सुकः ॥६८॥
मेघगम्भीरनिनदो महारावनकुलात्नकः ।
कालनेमिप्रानहारी मकरीशापमोक्षदः ॥६९॥
रसो रसज्ञः सम्मानो रूपं चक्षुः श्रुतिर्वचः ।
घ्राणो गन्धः स्पर्शनं च स्पर्शोऽहङ्कारमानगः ॥७०॥
नेतिनेतीतिगम्यश्च वैकुण्ठभजनप्रियः ।
गिरीशो गिरिजाकान्तो दुर्वासाः कविरङ्गिराः ॥७१॥
भृगुर्वसिष्ठश्च्यवनो नारदस्तुम्बरोऽमलः ।
विश्वक्षेत्रो विश्वबीजो विश्वनेत्रश्च विश्वपः ॥७२॥
याजको यजमानश्च पावकः पितरस्तथा ।
श्रद्धा बुद्धिः क्षमा तन्द्रा मन्त्रो मन्त्रयिता स्वरः ॥७३॥
राजेन्द्रो भूपती रुण्डमाली संसारसारथिः ।
नित्यसम्पूर्णकामश्च भक्तकामधुगुत्तमः ॥७४॥
गणपः केशवो भ्राता पिता माता च मारुतिः ।
सहस्त्रमूर्द्धानेकास्यः सहस्त्राक्षः सहस्त्रपात् ॥७५॥
कामजित् कामदहनः कामः कामफलप्रदः ।
मुद्रापहारी रक्षाघ्नः क्षितिभारहरो बलः ॥७६॥
नखदंष्ट्रायुधो विष्णुर्भक्ताभयवरप्रदः ।
दर्पहा दर्पदो दंष्ट्राशतमूर्तिरमूर्तिमान् ॥७७॥
महानिधिर्महाभागो महाभर्गो महर्द्धिदः ।
महाकारो महायोगी महातेजा महाद्युतिः ॥७८॥
महासनो महानादो महामन्त्रो महामतिः ।
महागमो महोदारो महादेवात्मको विभुः ॥७९॥
रौद्रकर्मा क्रूरकर्मा रत्ननाभः कृतागमः ।
अम्भोधिलङ्घनः सिंहः सत्यधर्मप्रमोदनः ॥८०॥
जितामित्रो जयः सोमो विजयो वायुनन्दनः ।
जीवदाता सहस्त्रांशुर्मुकुन्दो भूरिदक्षिणः ॥८१॥
सिद्धार्थः सिद्धिदः सिद्धसङ्कल्पः सिद्धिहेतुकः ।
सप्तपातालचरणः सप्तर्षिगणावन्दितः ॥८२॥

सप्ताब्धिलङ्घनो वीरः सप्तद्वीपोरुमण्डलः ।
सप्ताङ्गराज्यसुखदः सप्तमातृनिषेवितः ॥८३॥
सप्तस्वर्लोकमुकुटः सप्तहोता स्वराश्रयः ।
सप्तच्छन्दोनिधिः सप्तच्छन्दः सप्तजनाश्रयः ॥८४॥
सप्तसामोपगीतश्च सप्तपातालसंश्रयः ।
मेधादः कीर्तिदः शोकहारी दौर्भाग्यनाशनः ॥८५॥
सर्वरक्षाकारो गर्भदोषहा पुत्रपौत्रदः ।
प्रतिवादिमुखस्तम्भो रुष्टचित्तप्रसादनः ॥८६॥
पराभिचारशमनो दुःखहा बन्धमोक्षदः ।
नवद्वारपुराधारो नवद्वारनिकेतनः ॥८७॥
नरनारायणस्तुत्यो नवनाथमहेश्वरः ।
मेखली कवची खड्गी भ्राजिष्णुर्जिष्णुसारथिः ॥८८॥
बहुयोजनविस्तीर्णपुच्छः पुच्छहतासुरः ।
दुष्टग्रहनिहन्ता च पिशाचग्रहघातकः ॥८९॥
बालग्रहविनाशी च धर्मनेता कृपाकरः ।
उग्रकृत्यश्चोग्रवेग उग्रनेत्रः शतक्रतुः ॥९०॥
शतमन्युनुतः स्तुत्यः स्तुतिः स्तोता महाबलः ।
समग्रगुणशाली च व्यग्रो रक्षोविनाशकः ॥९१॥
रक्षोऽग्निदाहो ब्रह्मेशः श्रीधरो भक्तवत्सलः ।
मेघनादो मेघरूपो मेघवृष्टिनिवारकः ॥९२॥
मेघजीवनहेतुश्च मेघश्यामः परात्मकः ।
समीरतनयो योद्धा नृत्यविद्याविशारदः ॥९३॥
अमोघोऽमोघदृष्टीश्च इष्टदोऽरिष्टनाशनः ।
अर्थोऽनर्थापहारी च समर्थो रामसेवकः ॥९४॥
अर्थिवन्द्योऽसुरारातिः पुण्डरीकाक्ष आत्मभूः ।
संकर्षणो विशुद्धात्मा विद्याराशिः सुरेश्वरः ॥९५॥
अचलोद्धारको नित्यः सेतुकृद् रामसारथिः ।
आनन्दः परमानन्दो मत्स्यः कूर्मो निराश्रयः ॥९६॥
वाराहो नारसिंहश्च वामनो जमदग्निजः ।
रामः कृष्णः शिवो बुद्धः कल्की रामाश्रयो हरिः ॥९७॥
नन्दी भृङ्गी च चण्डी च गणेशो गणसेवितः ।
कर्माध्यक्षः सुराध्यक्षो विश्रामो जगतीपतिः ॥९८॥
जगन्नाथः कपीशश्च सर्वावासः सदाश्रयः ।
सुग्रीवादिस्तुतो दान्तः सर्वकार्मा प्लवङ्गमः ॥९९॥





नखदारितरक्षाश्च नखयुद्धविशारदः ।
कुशलः सुधनः शेषो वासुकिस्तक्षकस्तथा ॥१००॥
स्वर्णवर्णो बलाढ्यश्च पुरुजेताघनाशनः ।
कैवल्यरूपः कैवल्यो गरुडः पन्नगोरगः ॥१०१॥
किलकिलरावहतारातिगर्वपर्वतभेदनः ।
वज्राङ्गो वज्रदंष्ट्रश्च भक्तवज्रनिवारकः ॥१०२॥
नखायुधो मणिग्रीवो ज्वालामाली च भास्करः ।
प्रौढप्रतापस्तपनो भक्ततापनिवारकः ॥१०३॥
शरणं जीवनं भोक्ता नानाचेष्टो ह्यचञ्चलः ।
स्वस्तिमान् स्वस्तिदो दुःखशातनः पवनात्मजः ॥१०४॥
पावनः पवनः कान्तो भक्तागःसहनो बली ।
मेघनादरिपुर्मेघनादसंहतराक्षसः ॥१०५॥
क्षरोऽक्षरी विनीतात्मा वानरेशः सतां गतिः ।
श्रीकण्ठः शितिकण्ठश्च सहायः सहनायकः ॥१०६॥
अस्थूलस्त्वनणुर्भर्गो दिव्यः संसृतिनाशनः ।
अध्यात्मविद्यासारश्च ह्याध्यात्मदुशलः सुधीः ॥१०७॥
अकल्मषः सत्यहेतुः सत्यदः सत्यगोचरः ।
सत्यगर्भः सत्यरूपः सत्यः सत्यपराक्रमः ॥१०८॥
अञ्जनाप्राणलिङ्गश्च वायुवंशोद्भवः शुभः ।
भद्ररूपो रुद्ररूपः सुरूपश्चित्ररूपधृक् ॥१०९॥
मैनाकवन्दितः सूक्ष्मदर्शनो विजयो जयः ।
कान्तदिङ्मण्डलो रुद्रः प्रकटीकृतविक्रमः ॥११०॥
कम्बुकण्ठः प्रसन्नात्मा ह्रस्वनासो वृकोदरः ।
लम्बौष्ठः कुण्डली चित्रमाली योगविंदा वरः ॥१११॥
विपश्चित्कविरानन्दविग्रहोऽनल्पशासनः ।
फाल्गुनीसूनुरव्यग्रो योगात्मा योगतत्परः ॥११२॥
योगविद् योगकर्ता च योगयोनिर्दिगम्बरः ।
अकारादिहकारान्तवर्णनिर्मितविग्रहः ॥११३॥
उलूखलमुखः सिद्धसंस्तुतः प्रमथेश्वरः ।
श्लिष्टजङ्घः श्लिष्टजानुः श्लिष्टपाणिः शिखाधरः ॥११४॥
सुशर्मामितशर्मा च नारायणपरायणः ।
जिष्णुर्भविष्णू रोचिष्णुर्ग्रसिष्णुः स्थाणुरेव च ॥११५॥
हरिरुद्रानुसेकोऽथ कम्पनो भूमिकम्पनः ।
गुणप्रवाहः सूत्रात्मा वीतरागस्तुतिप्रियः ॥११६॥

नागकन्याभध्वंसी रुक्मवर्णः कपालभृत् ।
अनाकुलो भवोपायोऽनपायो वेदपारगः ॥११७॥
अक्षरः पुरुषो लोकनाथ ऋक्षप्रभुर्दृढः ।
अष्टाङ्गयोगफलभुक् सत्यसंधः पुरुष्टुतः ॥११८॥
श्मशानस्थाननिलयः प्रेतविद्रावनक्षमः ।
पञ्चाक्षरपरः पञ्चमातृको रञ्जनध्वजः ॥११९॥
योगिनीवृन्दवन्द्यश्रीः शत्रुघ्नोऽनन्तविक्रमः ।
ब्रह्मचारीन्द्रियरिपुर्धृतदण्डो दशात्मकः ॥१२०॥
अप्रपञ्चः सदाचारः शूरसेनाविदारकः ।
वृद्धः प्रमोद आनन्दः सप्तद्वीपपतिन्धरः ॥१२१॥
नवद्वारपुराधारः प्रत्यग्रः सामगायकः ।
षट्चक्रधाम स्वर्लोकाभयकृन्मानदो मदः ॥१२२॥
सर्ववश्यकरः शक्तिरनन्तोऽनन्तमङ्गलः ।
अष्टमूर्तिर्नयोपेतो विरूपः सुरसुन्दरः ॥१२३॥
धूमकेतुर्महाकेतुः सत्यकेतुर्महारथः ।
नन्दिप्रियः स्वतन्त्रश्च मेखली डमरुप्रियः ॥१२४॥
लौहाङ्गः सर्वविद्धन्वी खण्डलः शर्व ईश्वरः ।
फलभुक् फलहस्तश्च सर्वकर्मफलप्रदः ॥१२५॥
धर्माध्यक्षो धर्मपालो धर्मो धर्मप्रदोऽर्थदः ।
पञ्चविंशतितत्त्वज्ञस्तारको ब्रह्मतत्परः ॥१२६॥
त्रिमार्गवसतिर्भीमः सर्वदुःखनिबर्हणः ।
ऊर्जस्वान् निष्कलः शूली मौलिर्गर्जन्निशाचारः ॥१२७॥
रक्ताम्बरधरो रक्तो रक्तमाल्यो विभूषणः ।
वनमाली शुभाङ्गश्च श्वेतः श्वेताम्बरो युवा ॥१२८॥
जयोऽजयपरीवारः सहस्रवदनः कपिः ।
शाकिनीडाकिनीयक्षरक्षोभूतप्रभञ्जकः ॥१२९॥
सद्योजातः कामगतिर्ज्ञानमूर्तिर्यशस्करः ।
शम्भुतेजाः सार्वभौमो विष्णुभक्तः प्लवङ्गमः ॥१३०॥
चतुर्नवतिमन्त्रज्ञः पौलस्त्यबलदर्पहा ।
सर्वलक्ष्मीप्रदः श्रीमानङ्गदप्रिय ईडितः ॥१३१॥
स्मृतिबीजं सुरेशानः संसारभयनाशनः ।
उत्तमः श्रीपरीवारः श्रितो रुद्रश्च कामधुक् ॥१३२॥
॥ इति मन्त्रमहार्णवे पूर्वखण्डे नवमतरङ्गे श्रीरामकृतं श्रीहनुमत्सहस्रनामस्तोत्रं सम्पूर्णम् ॥

# ॥ श्रीहनूमत्स्मरणम् ॥

प्रातः स्मरामि हनुमन्तमनन्तवीर्यं
श्रीरामचन्द्रचरणाम्बुजचञ्चरीकम् ।
लङ्कापुरीदहननन्दितदेववृन्दं
सर्वार्थसिद्धिसदनं प्रथितप्रभावम् ॥१॥

माध्यं नमामि वृजिनार्णवतारणैक-
धीरं शरण्यमुदितानुपमप्रभावम् ।
सीताऽऽधिसिन्धुपरिशोषणकर्मदक्षं
वन्दारुकल्पतरुमव्ययमाञ्जनेयम् ॥२॥

सायं भजामि शरणोपसृताखिलार्ति-
पुञ्जप्रणाशनविधौ प्रथितप्रतापम् ।
अक्षान्तकं सकलराक्षसवंशधूम-
केतुं प्रमोदितविदेहसुतं दयालुम् ॥३॥

# ॥आपदुद्धारक श्रीहनूमत्स्तोत्रम् ॥

विभीषणकृतम्

श्रीहनुमते नमः । अस्य श्रीहनुमत्स्तोत्रमहामन्त्रस्य, विभीषण ऋषिः, अनुष्टुप् छन्दः, हनुमान् देवता । मम शत्रुमुखस्तम्भनार्थे सर्वकार्यसिद्ध्यर्थे च जपे विनियोगः ।

ध्यानम्

चन्द्राभं चरणारविन्दयुगलं कौपीनमौञ्जीधरं
नाभ्यां वै कटिसूत्रयुक्तवसनं यज्ञोपवीतावृतम् ।
हस्ताभ्यामवलम्ब्य चाञ्जलिमथो हारावलीकुण्डलं
बिभ्रद्दीर्घशिखं प्रसन्नवदनं दिव्याञ्जनेयं भजे ॥

मन्त्रः-ॐ नमो हनुमते रुद्राय ।
मम सर्वदुष्टजनमुखस्तम्भनं कुरु कुरु ॥

मम सर्वकार्यसिद्धिं कुरु कुरु । ऐं ह्रां ह्रीं ह्रूं फट् स्वाहा ।
note अष्टवारं जपेत् ।

आपन्नाखिललोकार्तिहारिणे श्रीहनूमते ।
अकस्मादागतोत्पातनाशनाय नमोऽस्तु ते ॥१॥

सीतावियुक्तश्रीरामशोकदुःखभयापह ।
तापत्रयस्य संहारिन्नाञ्जनेय नमोऽस्तु ते ॥२॥

आधिव्याधिमहामारिग्रहपीडापहारिणे ।
प्राणापहन्त्रे दैत्यानां रामप्राणात्मने नमः ॥३॥

संसारसागरावर्तागतसम्भ्रान्तचेतसाम् ।
शरणागतमर्त्यानां शरण्याय नमोऽस्तु ते ॥४॥

राजद्वारे बिलद्वारे प्रवेशे भूतसङ्कुले ।
गजसिंहमहाव्याघ्रचोरभीषणकानने ॥५॥

महाभयेऽग्निसंस्थाने शत्रुसङ्गसमाश्रिते ।
शरणागतमर्त्यानां शरण्याय नमो नमः ॥६॥

प्रदोषे वा प्रभाते वा ये स्मरन्त्यञ्जनासुतम् ।
अर्थसिद्धियशःकामान् प्राप्नुवन्ति न संशयः ॥७॥

कारागृहे प्रयाणे च सङ्ग्रामे देशविप्लवे ।
ये स्मरन्ति हनूमन्तं तेषां नास्ति विपत्तयः ॥८॥

वज्रदेहाय कालाग्निरुद्रायामिततेजसे ।
नमः प्लवगसैन्यानां प्राणभूतात्मने नमः ॥९॥

दुष्टदैत्यमहादर्पदलनाय महात्मने ।
ब्रह्मास्त्रस्तम्भनायास्मै नमः श्रीरुद्रमूर्तये ॥१०॥

जप्त्वा स्तोत्रमिदं पुण्यं वसुवारं पठेन्नरः ।
राजस्थाने सभास्थाने वादे प्राप्ते जपेद्ध्रुवम् ॥११॥

विभीषणकृतं स्तोत्रं यः पठेत् प्रयतो नरः ।
सर्वापद्भ्यो विमुच्येत नात्र कार्या विचारणा ॥१२॥

# ॥ श्रीहनुमद्वन्दनम् ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥१॥

अञ्जनीगर्भसम्भूत कपीन्द्रसचिवोत्तम ।
रामप्रिय नमस्तुभ्यं हनूमन् रक्ष सर्वदा ॥२॥

अतुलितबलधामं स्वर्णशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् ।
सकलगुणनिधानं वानराणामधीशं
रघुपतिप्रियभक्तं वातजातं नमामि ॥३॥

अपराजित पिङ्गाक्ष नमस्ते राजपूजित ।
दीने मयि दयां कृत्वा मम दुःखं विनाशय ॥४॥

अशेषलङ्कापतिसैन्यहन्ता श्रीरामसेवाचरणैककर्ता ।
अनेकदुःखाहतलोकगोप्ता त्वसौ हनूमान्मम सौख्यकर्ता ॥५॥

आञ्जनेयं पाटलास्यं स्वर्णाद्रिसमविग्रहम् ।
पारिजातद्रुमूलस्थं वन्दे साधकनन्दनम् ॥६॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥७॥

आधिव्याधिमहामारिग्रहपीडापहारिणे ।
प्राणापहर्त्रे दैत्यानां रामप्राणात्मने नमः ॥८॥

आपन्नाखिललोकार्तिहारिणे श्रीहनूमते ।
अकस्मादागतोत्पातनाशनाय नमोऽस्तु ते ॥९॥

उद्यत्कोट्यर्कसङ्काशं जगत्प्रक्षोभहारकम् ।
श्रीरामाङ्घ्रिध्याननिष्ठं सुग्रीवप्रमुखार्चितम् ।
वित्रासयन्तं नादेन राक्षसान् मारुतिं भजे ॥१०॥

उद्यदादित्यसङ्काशमुदारभुजविक्रमम् ।
कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम् ॥११॥

श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम् ।
अभयं वरदं दोर्भ्यां कलये मारुतात्मजम् ॥१२॥

उद्यन्मार्तण्डकोटिप्रकटरुचियुतं चारुवीरासनस्थं
मौञ्जीयज्ञोपवीतारुणरुचिरशिखाशोभनं कुण्डलाङ्कम् ।
भक्तानामिष्टदं तं प्रणतमुनिजनं मेघनादप्रमोदं
वन्दे देवं विधेयं प्लवगकुलपतिं गोष्पदीभूतवार्धिम् ॥१३॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥१४॥

कदापि शुभ्रैर्वरचामरैः प्रभुं गायन् गुणान् वीजयति स्थितोऽग्रतः।
कदाप्युपश्लोकयति स्वनिर्मितैः स्तवैः शुभैः श्रीहनुमान् कृताञ्जलिः॥१५॥

करात्तशैलशस्त्राय द्रुमशस्त्राय ते नमः ।
बालैकब्रह्मचर्याय रुद्रमूर्तिधराय च ॥१६॥

कारागृहे प्रयाणे च सङ्ग्रामे देशविप्लवे ।
स्मरन्ति त्वां हनूमन्तं तेषां नास्ति विपत्तदा ॥१७॥

कृतक्रोधे यस्मिन्नमरनगरी मङ्गलरवा
नवातङ्का लङ्का समजनि वनं वृश्चति सति ।
सदा सीताकान्तप्रणतिमतिविख्यातमहिमा
हनूमानव्यान्नः कपिकुलशिरोमण्डनमणिः ॥१८॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् । १९
जानुस्थवामबाहुं च ज्ञानमुद्रापरं हरिम् ।
अध्यात्मचित्तमासीनं कदलीवनमध्यगम् ।
बालार्ककोटिप्रतिमं वन्दे ज्ञानप्रदं हरिम् ॥२०॥

ज्वलत्काञ्चनवर्णाय दीर्घलाङ्गूलधारिणे ।
सौमित्रिजयदात्रे च रामदूताय ते नमः ॥२१॥

तप्तचामीकरनिभं भीघ्नं संविहिताञ्जलिम् ।
चलत्कुण्डलदीप्तास्यं पद्माक्षं मारुतिं भजे ॥२२॥

द्विभुजं स्वर्णवर्णाभं रामसेवापरायणम् ।
मौञ्जीकौपीनसहितं तं वन्दे रामसेवकम् ॥२३॥

दहनतप्तसुवर्णसमप्रभं भयहरं हृदये विहिताञ्जलिम् ।
श्रवणकुण्डलशोभिमुखाम्बुजं नमत वानरराजमिहाद्भुतम् ॥२४॥

नखायुधाय भीमाय दन्तायुधधराय च ।
विहङ्गाय च शर्वाय वज्रदेहाय ते नमः ॥२५॥

नादबिन्दुकलातीतं उत्पत्तिस्थितिवर्जितम् ।
साक्षादीश्वरसद्रूपं हनूमन्तं भजाम्यहम् ॥२६॥

पञ्चास्यमच्युतमनेकविचित्रवर्णवक्त्रं शशाङ्कशेखरं कपिराजवर्यम् ।
पीताम्बरादिमुकुटैरुपशोभिताङ्गं पिङ्गाक्षमाद्यमनिशं मनसा स्मरामि ॥२७॥

पद्मरागमणिकुण्डलत्विषा पाटलीकृतकपोलमण्डलम् ।
दिव्यहेमकदलीवनान्तरे भावयामि पवमाननन्दनम् ॥२८॥

प्रतप्तस्वर्णवर्णाभं संरक्तारुणलोचनम् ।
सुग्रीवादियुतं वन्दे पीताम्बरसमावृतम् ।
गोष्पदीकृतवारीशं (राशिं) पुच्छमस्तकमीश्वरम्
ज्ञानमुद्रां च बिभ्राणं सर्वालङ्कारभूषितम् ॥२९॥

बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता ।
अजाड्यं वाक्पटुत्वं च हनूमत्स्मरणाद्भवेत् ॥३०॥

भान्विन्दूचरणारविन्दयुगलं कौपीनमौञ्जीधरं
काञ्चिश्रेणिधरं दुकूलवसनं यज्ञोपवीताजिनम् ।
हस्ताभ्यां धृतपुस्तकं च विलसद्धारावलिं कुण्डलं
खेचालं विशिखं प्रसन्नवदनं श्रीवायुपुत्रं भजे ॥३१॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥३२॥

मरुत्सुतं रामपदारविन्दवन्दारुबृन्दारकमाशु वन्दे ।
धीशक्तिभक्तियुतिसिद्धयो यं कान्तं स्वकान्ता इव कामयन्ते ॥३३॥

मर्कटेश महोत्साह सर्वशत्रुहरोत्तम ।
शत्रुं सम्हर मां रक्ष श्रीमन्नापद उद्धर ॥३४॥

मर्कटेश महोत्साह सर्वातङ्कनिवारक ।
अरीन्सम्हर मां रक्ष सुखं दापय मे प्रभो ॥३५॥

महाशैलं समुत्पाट्य धावन्तं रावणं प्रति ।
तिष्ठ तिष्ठ रणे दुष्ट घोररावं समुच्चरन् ॥३६॥

लाक्षारसारुणं वन्दे कालान्तकयमोपमम् ।
ज्वलदग्निलसन्नेत्रं सूर्यकोटिसमप्रभम् ।
अङ्गदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणम् ॥३७॥

मारुतिं वीरवज्राङ्गं भक्तरक्षणदीक्षितम् ।
हनूमन्तं सदा वन्दे राममन्त्रप्रचारकम् ॥३८॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥३९॥

यो वारांनिधिमल्पपल्वलमिवोल्लङ्घ्य प्रतापान्वितो
वैदेहीघनशोकवह्निहरणो वैकुण्ठभक्तप्रियः ।
अक्षाद्यर्जितराक्षसेश्वरमहादर्पापहारी रणे
सोऽयं वानरपुङ्गवोऽवतु सदा चास्मान् समीरात्मजः ॥४०॥

राजद्वारि बिलद्वारि प्रवेशे भूतसङ्कुले ।
गजसिम्हमहाव्याघ्रचौरभीषणकानने । ४१
शरणाय शरण्याय वातात्मज नमोस्तु ते ।
नमः प्लवगसैन्यानां प्राणभूतात्मने नमः ॥४२॥

रामेष्टं करुणापूर्णं हनूमन्तं भयापहम् ।
शत्रुनाशकरं भीमं सर्वाभीष्टफलप्रदम् ॥४३॥

प्रदोषे त्वां प्रभाते वा ये स्मरन्त्यञ्जनासुतम् ।
अर्थसिद्धिं यशःपूर्तिं प्राप्नुवन्ति न संशयः ॥४४॥

लाक्षारसारुणं वन्दे कालान्तकयमोपमम् ।
ज्वलदग्निलसन्नेत्रं सूर्यकोटिसमप्रभम् ।
अङ्गदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणम् ॥४५॥

वज्रदेहाय कालाग्निरुद्रायामिततेजसे ।
ब्रह्मास्त्रस्तम्भनायास्मै नमः श्रीरुद्रमूर्तये ॥४६॥

वज्राङ्गं पिङ्गकेशाढ्यं स्वर्णकुण्डलमण्डितम् ।
नियुद्धमुपसङ्क्रम्य पारावारपराक्रमम् ॥४७॥

वामहस्तगदायुक्तं पाशहस्तकमण्डलुम् ।
उद्यद्दक्षिणदोर्दण्डं हनूमन्तं विचिन्तये ॥४८॥

वज्राङ्गं पद्मनेत्रं कनकमयलसत्कुण्डलाक्रान्तगण्डं
दम्भोलिस्तम्भसारप्रहरणसुवशीभूतरक्षोऽधिनाथम् ।
उद्यल्लाङ्गूलसप्ताचलविचलकरं भीममूर्तिं कपीन्द्रं
वन्दे तं रामचन्द्रप्रमुखदृढतरं सत्प्रसारं प्रसन्नम् ॥४९॥

वन्दे बालदिवाकरद्युतिनिभं देवारिदर्पापहं
देवेन्द्रप्रमुखैःप्रशस्तयशसं देदीप्यमानं रुचा ।
सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं
संरक्तारुणलोचनं पवनजं पीताम्बरालङ्कृतम् ॥५०॥

वन्दे रणे हनुमन्तं कपिकोटिसमन्वितम् ।
धावन्तं रावणं जेतुं दृष्ट्वा सत्वरमुत्थितम् ॥५१॥

लक्ष्मणं च महावीरं पतितं रणभूतले ।
गुरुं च क्रोधमुत्पाद्य गृहीत्वा गुरुपर्वतम् ॥५२॥

हाहाकारैः सदर्पैश्च कम्पयन्तं जगत्त्रयम् ।
ब्रह्माण्डं स समावाप्य कृत्वा भीमकलेवरम् ॥५३॥

वन्दे वानरसिम्हखगराट् क्रोडाश्ववक्त्रान्वितं
दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा ।
हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भाङ्कुशाद्रीन् हलं
खट्वाङ्गं फणिभूरुहं दशभुजं सर्वारिवीरापहम् ॥५४॥

वामहस्ते महावृक्षं दशास्यकरखण्डनम् ।
उद्यद्दक्षिणदोर्दण्डं हनूमन्तं विचिन्तये ॥५५॥

वामे करे वैरिभिदं वहन्तं शैलं परे शृङ्खलहारटङ्कम् ।
दधानमच्छच्छवियज्ञसूत्रं भजे ज्वलत्कुण्डलमाञ्जनेयम्
॥५६॥

वामे जानुनि वामबाहुमपरं तं ज्ञानमुद्रायुतं
हृद्देशे कलयन् वृतो मुनिगणैरध्यात्मदत्तेक्षणः ।
आसीनः कदलीवने मणिमये बालार्ककोटिप्रभो
ध्यायन् ब्रह्म परं करोतु मनसः सिद्धिं हनूमान्मम ॥५७॥

वामे शैलं वैरिभिदं विशुद्धं टङ्कमन्यतः ।
दधानं स्वर्णवर्णं च वन्दे कुण्डलिनं हरिम् ॥५८॥

सदा राम रामेति नामामृतं तं सदा राममानन्दनिष्यन्दकन्दम्।
पिबन्तं नमन्तं सुदन्तं हसन्तं हनूमन्तमन्तर्भजे तं नितान्तम्
॥५९॥

सपीतकौपीनमुदञ्चिताङ्गुलिम्
समुज्ज्वलन्मौञ्ज्यजिनोपवीतिनम् ।
सकुण्डलं लम्बशिखासमावृतं तमाञ्जनेयं शरणं प्रपद्ये ॥६०॥

सर्वारिष्टनिवारकं शुभकरं पिङ्गाक्षमक्षापहं
सीतान्वेषणतत्परं कपिवरं कोटीन्दुसूर्यप्रभम् ।
लङ्काद्वीपभयङ्करं सकलदं सुग्रीवसम्मानितं
देवेन्द्रादिसमस्तदेवविनुतं काकुत्स्थदूतं भजे ॥६१॥

संसारसागरावर्तकर्तव्यभ्रान्तचेतसाम् ।
शरणागतमर्त्यानां शरण्याय नमोऽस्तु ते ॥६२॥

सीतारामपदाम्बुजे मधुपवद्यन्मानसं लीयते
सीतारामगुणावली निशि दिवा यज्जिह्वया पीयते ।

## ॥श्रीहनुमद्ध्यानम् मार्कण्डेयपुराणतः ॥

मरकतमणिवर्णं दिव्यसौन्दर्यदेहं
नखरदशनशस्त्रैर्वज्रतुल्यैः समेतम् ।

तडिदमलकिरीटं मूर्ध्नि रोमाङ्कितं च
हरितकुसुमभासं नेत्रयुग्मं सुफुल्लम् ॥१॥

अनिशमतुलभक्त्या रामदेवस्य योग्या-
न्निखिलगुरुचरित्राण्यास्यपद्माद्वदन्तम् ।

स्फटिकमणिनिकाशे कुण्डले धारयन्तं
गजकर इव बाहुं रामसेवार्थजातम् ॥२॥

अशनिसमद्रढिम्नं दीर्घवक्षःस्थलं च
नवकमलसुपादं मर्दयन्तं रिपूंश्च ।

हरिदयितवरिष्ठं प्राणसूनुं बलाढ्यं
निखिलगुणसमेतं चिन्तये वानरेशम् ॥३॥

इति मार्कण्डेयपुराणतः श्रीहनुमद्ध्यानम् ।

## ॥श्रीहनुमत्स्तोत्रम् व्यासतीर्थविरचितम् ॥

नमामि दूतं रामस्य सुखदं च सुरद्रुमम् ।
पीनवृत्तमहाबाहुं सर्वशत्रुनिबर्हणम् ॥१॥
नानारत्नसमायुक्तकुण्डलादिविभूषितम् ।
सर्वदाभीष्टदातारं सतां वै दृढमाहवे ॥२॥
वासिनं चक्रतीर्थस्य दक्षिणस्थगिरौ सदा ।
तुङ्गाम्भोधितरङ्गस्य वातेन परिशोभिते ॥३॥
नानादेशागतैः सद्भिः सेव्यमानं नृपोत्तमैः ।
धूपदीपादिनैवेद्यैः पञ्चखाद्यैश्च शक्तितः ॥४॥
भजामि श्रीहनूमन्तं हेमकान्तिसमप्रभम् ।
व्यासतीर्थयतीन्द्रेण पूजितं प्रणिधानतः ॥५॥
त्रिवारं यः पठेन्नित्यं स्तोत्रं भक्त्या द्विजोत्तमः ।
वाञ्छितं लभतेऽभीष्टं षण्मासाभ्यन्तरे खलु ॥६॥
पुत्रार्थी लभते पुत्रं यशोऽर्थी लभते यशः ।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥७॥
सर्वथा मास्तु सन्देहो हरिः साक्षी जगत्पतिः ।
यः करोत्यत्र सन्देहं स याति निरयं ध्रुवम् ॥८॥
इति श्रीव्यासतीर्थविरचितम् हनुमत्स्तोत्रं सम्पूर्णम् ।

# ॥श्रीहनुमत्स्तोत्रं विभीषणकृतम् ॥

श्रीगणेशाय नमः ।
नमो हनुमते तुभ्यं नमो मारुतसूनवे ।
नमः श्रीरामभक्ताय श्यामास्याय च ते नमः ॥१॥

नमो वानरवीराय सुग्रीवसख्यकारिणे ।
लङ्काविदाहनार्थाय हेलासागरतारिणे ॥२॥

सीताशोकविनाशाय राममुद्राधराय च ।
रावणान्तकुलच्छेदकारिणे ते नमो नमः ॥३॥

मेघनादमखध्वंसकारिणे ते नमो नमः ।
अशोकवनविध्वंसकारिणे भयहारिणे ॥४॥

वायुपुत्राय वीराय आकाशोदरगामिने ।
वनपालशिरश्छेदलङ्काप्रासादभञ्जिने ॥५॥

ज्वलत्कनकवर्णाय दीर्घलाङ्गूलधारिणे ।
सौमित्रिजयदात्रे च रामदूताय ते नमः ॥६॥

अक्षस्य वधकर्त्रे च ब्रह्मपाशनिवारिणे ।
लक्ष्मणाङ्गमहाशक्तिघातक्षतविनाशिने ॥७॥

रक्षोघ्नाय रिपुघ्नाय भूतघ्नाय च ते नमः ।
ऋक्षवानरवीरौघप्राणदाय नमो नमः ॥८॥

परसैन्यबलघ्नाय शस्त्रास्त्रघ्नाय ते नमः ।
विषघ्नाय द्विषघ्नाय ज्वरघ्नाय च ते नमः ॥९॥

महाभयरिपुघ्नाय भक्तत्राणैककारिणे ।
परप्रेरितमन्त्राणां यन्त्राणां स्तम्भकारिणे ॥१०॥

पयःपाषाणतरणकारणाय नमो नमः ।
बालार्कमण्डलग्रासकारिणे भवतारिणे ॥११॥

नखायुधाय भीमाय दन्तायुधधराय च ।
रिपुमायाविनाशाय रामाज्ञालोकरक्षिणे ॥१२॥

प्रतिग्रामस्थितायाथ रक्षोभूतवधार्थिने ।
करालशैलशस्त्राय द्रुमशस्त्राय ते नमः ॥१३॥

बालैकब्रह्मचर्याय रुद्रमूर्तिधराय च ।
विहङ्गमाय सर्वाय वज्रदेहाय ते नमः ॥१४॥

कौपीनवाससे तुभ्यं रामभक्तिरताय च ।
दक्षिणाशाभास्कराय शतचन्द्रोदयात्मने ॥१५॥

कृत्याक्षतव्यथाघ्नाय सर्वक्लेशहराय च ।
स्वाम्याज्ञापार्थसङ्ग्रामसङ्ख्ये सञ्जयधारिणे ॥१६॥

भक्तान्तदिव्यवादेषु सङ्ग्रामे जयदायिने ।
किल्किलाबुबुकोच्चारघोरशब्दकराय च ॥१७॥

सर्पाग्निव्याधिसंस्तम्भकारिणे वनचारिणे ।
सदा वनफलाहारसन्तृप्ताय विशेषतः ॥१८॥

महार्णवशिलाबद्धसेतुबन्धाय ते नमः ।
वादे विवादे सङ्ग्रामे भये घोरे महावने ॥१९॥

सिंहव्याघ्रादिचौरेभ्यः स्तोत्रपाठाद् भयं न हि ।
दिव्ये भूतभये व्याधौ विषे स्थावरजङ्गमे ॥२०॥

राजशस्त्रभये चोग्रे तथा ग्रहभयेषु च ।
जले सर्वे महावृष्टौ दुर्भिक्षे प्राणसम्प्लवे ॥२१॥

पठेत् स्तोत्रं प्रमुच्येत भयेभ्यः सर्वतो नरः ।
तस्य क्वापि भयं नास्ति हनुमत्स्तवपाठतः ॥२२॥

सर्वदा वै त्रिकालं च पठनीयमिदं स्तवम् ।
सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ॥२३॥

विभीषणकृतं स्तोत्रं ताक्ष्र्येण समुदीरितम् ।
ये पठिष्यन्ति भक्त्या वै सिद्ध्यस्तत्करे स्थिताः ॥२४॥

इति श्रीसुदर्शनसंहितायां विभीषणगरुडसंवादे
विभीषणकृतं हनुमत्स्तोत्रं सम्पूर्णम् ॥

# अक्षय तृतिया (अखातीज 21-अप्रैल-2015)

चिंतन जोशी

अक्षय तृतिया को पूरे भारत वर्ष में कई नामों से जाना और मनाया जाता हैं, जिसमें अक्षय तृतीया, आखा तीज तथा वैशाख तीज प्रमुख हैं। इस वर्ष 2015 में अक्षय तृतीया 21 अप्रैल को हैं।

भारतीय परंपराके अंतर्गत अक्षय तृतिया का पर्व प्रमुख त्यौहारों में से एक हैं। अक्षय तृतिया को अबूझ महूर्त भी कहा जाता हैं।

अक्षय तृतिया पर्व वैशाख मास के शुक्ल पक्ष की तृतिया तिथि के दिन मनाया जाता हैं। विद्वानो के अनुशार अक्षय तृतिया के दिन स्नान, जप, होम, दान आदि पूण्य कार्य करना विशेष लाभदायक होता हैं। क्योकि मान्यता हैं, कि इस दिन किये गय पुण्य कार्य का फल व्यक्ति को अक्षय रुप में प्राप्त होता हैं।

अक्षय तृतिया के दिन कोई भी शुभ कार्यो का प्रारम्भ करना विशेष शुभ माना जाता हैं। शास्त्रोक्त मतानुशार इस दिन कोई भी शुभ कार्य शुरु करने से उस कार्य का फल निश्चित स्थिर रुप में प्राप्त होते हैं।

शास्त्रो में उल्लेख हैं कि वैशाख मास के शुक्ल पक्ष की तृतिया अर्थात अक्षय तृतिया के दिन भगवान के नर-नारायण, परशुराम, हयग्रीव रुप में अवतरित हुए थे। इस लिये अक्षय तृतिया को परशुराम व अन्य जयन्तियां मानकर उसे उत्सव रुप में मनाया जाता हैं।

एक पौराणिक मान्यता के अनुसार त्रेता युग की शुरुआत भी इसी दिन से हुई थी. इसी कारण से इसे त्रेतायुगादि तिथि भी कहा जाता हैं।

विद्वानो के अनुशार अक्षय तृतिया के दिन गर्मी के मौसम में खाने-पीने-पहनने आदि काम आने वाली और गर्मी को शांत करने वाली सभी वस्तुओं का दान करना शुभ माना जाता हैं।

- ❖ अक्षय तृतिया के दिन जौ, गेहूं, चने, दही, चावल, खिचडी, ईश (गन्ना) का रस, ठण्डाई व दूध से बने हुए पदार्थ, सोना, कपडे, जल का घडा आदि दान करना भी लाभदायक माना जाता हैं।
- ❖ अक्षय तृतिया के दिन किए गए सभी धर्म कार्य अति उत्तम रहते हैं।
- ❖ अक्षय तृतिया के दिन व्रत-उपवास के लिये भी उत्तम माना जाता हैं।
- ❖ अक्षय तृतिया के दिन देश के कई हिस्सो में चावल, मूंग की बनी खिचडी खाने का रिवाज हैं।
- ❖ अक्षय तृतिया के दिन गंगा स्नान का बडा महत्व माना जाता हैं।

वैशाख शुक्ल पक्ष की तृतिया को स्वर्गीय आत्माओं की प्रसन्नाता के लिए कलश, पंखा, खडाऊँ, छाता, सत्तू, ककडी, खरबूजा आदि मौसमी फल, शक्कर इत्यादि पदार्थ ब्राह्माण को दान करने का विधान हैं।

अक्षय तृतिया के दिन चारों धामों में से एक श्री बद्रीनाथ नारायण धाम के पाट खुलते हैं।

## अक्षय तृतिया (परशुराम तीज)

वैशाख शुक्ल पक्ष की तृतिया को अक्षय तृतिया के नाम से जानाजाता हैं। इस दिन श्री परशुरामजी का जन्म दिन होने के कारण इसे परशुराम तीज या परशुराम जयंती भी कहा जाता हैं।

## अक्षय तृतीया शुभ मुहूर्त

भारत में पौराणिक काल से सभी शुभ कार्य शुभ मुहुर्त एवं शुभ समय पर प्रारंभ करने का प्रचलन हैं।

व्यक्ति द्वारा किए जाने वाले कार्य में सफलता प्राप्त करने के लिये शुभ मुहुर्त और समय का चुनाव किया जाता हैं।

# अप्रैल-2015 के प्रमुख व्रत-पर्व

स्वस्तिक.ऎन.जोशी

## प्रदोष व्रत (1 अप्रैल, 16 अप्रैल एवं30 अप्रैल)

### प्रदोष व्रत का महत्व

विद्वानों ने प्रदोष व्रत के महत्व को अति व्यापक, सर्वोच्च एवं सर्व श्रेष्ठ बताया हैं, प्रदोष व्रत हर महीने में दो बार शुक्ल पक्ष और कृष्ण पक्ष की त्रयोदशी को प्रदोष व्रत कहते हैं। यदि इन तिथियों को सोमवार होतो उसे सोम प्रदोष व्रत कहते हैं, यदि मंगल वार होतो उसे भौम प्रदोष व्रत कहते हैं और शनिवार होतो उसे शनि प्रदोष व्रत व्रत कहते हैं। विशेष कर सोमवार, मंगलवार एवं शनिवार के प्रदोष व्रत अत्याधिक प्रभावकारी माने गये हैं। इस दिन व्रत रखने का विधान हैं।

प्रदोष व्रत का महत्व कुछ इस प्रकार का बताया गया हैं कि यदि कोई व्यक्ति जिसको सभी तरह के जप, तप और नियम संयम के बाद भी यदि उसके गृहस्थ जीवन में दुःख, संकट, क्लेश आर्थिक परेशानि, पारिवारिक कलह, संतानहीनता या संतान के जन्म के बाद भी यदि नाना प्रकार के कष्ट विघ्न-बाधाएं, रोजगार के साथ सांसारिक जीवन से परेशानिया खत्म नहीं हो रही हैं, तो उस व्यक्ति के लिए प्रति माह में पड़ने वाले दोनो प्रदोष व्रत पर जप, दान, व्रत इत्यादि पूण्य कार्य करना शुभ फलप्रद होता हैं।

ज्योतिष कि द्रष्टि से जो व्यक्ति चंद्रमा के कारण पीडित हो उसे वर्ष भर प्रदोष व्रतों पर चाहे वह किसी भी वारको पडता हो उसे प्रदोष व्रत अवश्य करना चाहिये।

**बुधवार** का प्रदोष व्रत अर्थात बुध प्रदोष व्रत करने से व्यक्ति कि कामना सिद्ध होती है।

**गुरुवार** के दिन पडने वाला प्रदोष व्रत विशेष कर संतान कामना हेतु या संतान की मंगल कामना हेतु रखना उत्तम होता हैं। संतानहीन दंपत्तियों के लिए इस व्रत पर घरमें मिष्ठान या फल इत्यादि गाय को खिलाने से शीघ्र शुभ फलकी प्राप्ति होति हैं। संतान कि कामना हेतु 16 प्रदोष व्रत करने का विधान हैं, एवं संतान बाधा में शनि प्रदोष व्रत सबसे उत्तम मनागया हैं। **(1 अप्रैल)** बुधवार का प्रदोष व्रत अर्थात बुध प्रदोष व्रत करने से व्यक्ति कि कामना सिद्ध होती है। **(16 अप्रैल एवं 30 अप्रैल)** संतान कि कामना हेतु प्रदोष व्रत के दिन पति-पत्नी दोनो प्रातः स्नान इत्यादि नित्य कर्म से निवृत होकर शिव, पार्वती और गणेशजी कि एक साथमें आराधना कर किसी भी शिव मंदिर में जाकर शिवलिंग पर जल भिषेक, पीपल के मूल में जल चढ़ाकर सारे दिन निर्जल रहने का विधान हैं।

सूर्यास्त के पश्चात 2 घण्टे एवं 24 मिनट रात्रि के आने से पूर्व का समय प्रदोष काल कहलाता हैं। इस व्रत में भगवान शंकर की पूजा की जाती है। इस व्रत में व्रती को निर्जल रहकर व्रत रखना होता है। प्रात: काल स्नान करके भगवान शिव की बेल पत्र, गंगाजल, अक्षत, धूप, दीप सहित पूजा करें। संध्या काल में पुन: स्नान करके इसी प्रकार से शिव जी की पूजा करना चाहिए। इस प्रकार प्रदोष व्रत करने से व्रती को पुण्य मिलता है।

## मदनद्वादशी (1 अप्रैल)

### मदनद्वादशी

मदनद्वादशी व्रत चैत्र शुक्ल द्वादशी को किया जाता है । उस दिन स्नान के जल में गुड डाल कर स्नान करके। एक वेदीपर चावलोंसे भरा हुआ कलश स्थापित कर और कलश पर ताँबेके पात्रमें गुड और सुवर्णकी प्रतिमा रखकर उसका गन्ध, पुष्प आदिसे विधिवत पूजन करे । साथ ही अनेक प्रकारके फल, फुल और नैवेद्य अर्पण करे तथा उनमेंसे एक फल लेकर उसको प्रसाद स्वरुप ग्रहण करे । इस प्रकार १३ महीने करे तो उसको पुत्र से संबंधित शोक-संताप नहीं होता ।

## चैत्री पूर्णिमा (4 अप्रैल)

### चैत्री पूर्णिमा

चैत्र मासकी पूर्णिमाको विष्णुरुप सत्यनारायणका व्रत किया जाता हैं। पूर्णिमा व्रत हेतु चद्रोदयव्यापिनी पूर्णिमा तिथि ली जाती है । इसमे देवपूजन दान - पुण्य, तीर्थ-स्नान, दान-पुण्य, पुराण आदि का श्रवणादि करनेसे पूर्ण फल मिलता है ।

## वैशाखस्नान (4 अप्रैल से)

### वैशाखस्नान

चैत्र शुक्ल पूर्णिमासे प्रारंभ कर इक्कीस दिनों तक प्रातःकाल सूर्योदयसे पूर्व किसी तीर्थस्थान नदी या कुआँ, बावली, सरोवर या अपने घर पर ही शुद्ध जलसे स्नान करे और नित्य कर्म से निवृत्त होकर अपने इष्ट मन्त्र का यथाशक्ति जप करके एक बार भोजन करने का विधान हैं। इस प्रकार से यह व्रत इक्कीस दिनोंतक नित्य करने से अनेक प्रकारके रोग-शोक-दोष इत्यादि दूर होते हैं। मनुष्य के पुण्य कर्म में वृद्धि होती है ।

## हनुमद्व्रत (4 अप्रैल)

### हनुमद्व्रत

यह हनुमद्व्रत हनुमानजी की जन्मतिथि पर किया जाता है । हिन्दू संस्कृति में पंचांग के आधार से व्रत-पर्व-त्यौहारों का निर्णय किया जाता है, इस आधार पर श्री हनुमानजीकी जन्मतिथि किसी धर्म ग्रंथ में चैत्र शुक्ल पूर्णिमा और किसी में कार्तिक कृष्ण चतुर्दशी का वर्णन मिलता है।

प्रायः सभी देवी-देवता की जन्मतिथि एक ही मानाया जाता हैं, लेकिन श्री हनुमानजीकी जन्म दो तिथियों को मानाया जाता हैं। विभिन्न धार्मिक ग्रंथो में हनुमानजी की दोनो जन्म तिथियों का वर्णन किया गया हैं, लेकिन उसके अर्थो में भिन्नता हैं। तिथि की भिन्न ता कल्पभेद के कारण दो मानी जाती हैं। किसी धर्म ग्रंथ में वर्णित हैं की हनुमानजी का जन्म कार्तिक कृष्ण चतुर्दशी, मंगलवार को स्वाती नक्षत्र एवं मेष लग्न में हुवा था । अन्य धर्म ग्रंथ में वर्णित हैं की हनुमानजी का जन्म चैत्र शुक्ल पूर्णिमा, मंगलवार को हुवा था । यहि कारण हैं की हनुमानजी के भक्तों द्वारा इन दोनों तिथियों को व्रत-उपवास इत्यादि किया जाता हैं।

## संकष्टचतुर्थी (8 अप्रैल)

### संकष्टचतुर्थी

वैशाख मास की चतुर्थी को संकष्टी गणेश का पूजा कर ब्राह्मणों को शंख का दान करना चाहिए। इसके प्रभाव से मनुष्य समस्त लोक में कल्पों तक सुख प्राप्त करता है।

## संकष्टचतुर्थी (22 अप्रैल)

### वैशाख शुक्ल चतुर्थी

वैशाख मास की कृष्ण चतुर्थी को श्रीकृष्णपिंगाक्ष गणपति का पूजन किया जाता हैं।

## चण्डिका नवमी व्रत (13 अप्रैल एवं 27 अप्रैल)

### चण्डिका नवमी व्रत

यह व्रत वैशाख मास की दोनों पक्षोंमे नवमी तिथि को किया जाता है । व्रती को प्रातःस्नान इत्यादि से निवृत्त होकर लाल वस्त्र धारण कर सुगन्धित पुष्पादिसे चण्डिका देवीका विधि-विधान से पूजन करके उपवास रखने से सुख की प्राप्ति होती हैं

हंसकुन्देन्दुसन्काशस्तेजसा ध्रुवसंनिभः।
विमानवरमारुढो देवलोके महीयते ॥
(निर्णयामृते भविष्योत्तरे)

**अर्थातः** मनुष्य हंस, कुन्द और चन्द्रमाके समान गौरवर्ण एवं ध्रुवके समान तेजस्वी और दिव्य स्वरुप धारणकर उत्तम विमानपर विराजित हो कर देवलोकमें आदर पाता है ।

## परशुराम जयन्ती (20 अप्रैल)

### परशुराम जयन्ती

धर्म ग्रंथों में वर्णित हैं की परशुरामजीका जन्म वैशाख शुक्ल तृतीया तिथि को रात्रिके प्रथम प्रहरमें हुआ था, इस अलिए प्रदोषव्यापिनी तिथि ग्राह्य होती है । जानकार विद्वानों के मतानुसार यदि दो दिन प्रदोषव्यापिनी तिथि हो तो दूसरा व्रत करना चाहिये ।

## श्रीजानकी नवमी (27 अप्रैल)

### श्रीजानकी नवमी

विद्वानों के मतानुसार वैशाख शुक्ल नवमीको देवी भगवती जानकीका प्रादुर्भाव हुआ था । इस लिए इस दिन व्रत रहकर उनका जन्मोत्सव तथा पूजन किया जता हैं।

***

